नानावृत्तप्रतिपादकं थाईरामकथां निरूपयन्महाकाव्यं विरचयेत् ; थाईदेशविषये इदम्प्रथमं थाइदेशविलासमिति काव्यं प्रणयेत् ; शर्मण्यदेशीयट्यूबिंगनयात्राप्रसङ्गे च सर्वथाऽसंस्तुताज्जीवितकिंवदन्तीरूपेणाख्यातान् मिहिरसेनसदृशाज्जनात्सर्वविधं साहाय्यं विन्देत्। एतत्सर्वमनुध्यायैव 'भवितव्यानां द्वाराणि भवन्ति सर्वत्रेति' कलिदासीया पंक्तिरेवैतदात्मकथाशीर्षकरूपेणोपात्ता।''

आत्मकथेतिवृत्तत्वेनोपनिबद्धेऽस्मिन् ग्रन्थे शास्त्रिमहाभागैः स्वकीयस्य सारस्वतोपक्रमस्य उपस्थापनक्रमे दैवस्यानुक्रमेण प्रेरणास्पदता क्रमेणोपस्थापिताऽस्ति प्रतिपदम्। स्वकीयं पुत्रं शरच्चन्द्रं सम्बोध्य बैकाकनगरतः महाकविरसौ उपस्थापयति स्वकीयाननुभवान् अनुक्रमेण स्वजीवनस्वरूपनियामकान् ग्रन्थेऽस्मिन्। जिज्ञासितमासीदाचार्यचरणानामेतदितिवृत्तं तत्पुत्रेण शरच्चन्द्रेण बहुशः। तदीयां जिज्ञासामेवोपशमयितुमुपनिबद्ध्नाति महाकविरसौ स्वेतिवृत्तं प्रेरणायै संस्कृतज्ञानां संस्कृताधीतिनाञ्च-च्छात्राणाम्।

पाकिस्तानदेशाङ्गभूते लवपुराख्ये पुरे १९३० ईसवीये संवत्सरे लब्धजनिरसौ महाकविः शैशवे प्रतिवेशिनः कस्यापि यवनस्य एकया पारसीकपत्न्या महता स्नेहेनासीत् संवर्धितः। गर्भस्थोऽसौ शिशुः अविकलं वाल्मीकीयं रामायणं पितृचरणमुखात् श्रुत्वाऽवाधारयत् पार्थिवं चैतन्यं वपुः। तत्प्रभावादेवासीदस्य रामायणकथाशोधविषयिणी महती प्रवृत्तिः। तत्परिणामभूतमेवास्ति एतेषां कृतिद्वयं - **'दि रामायण-ए-लिंग्विस्टिक स्टडी'** इति शीर्षकेण आङ्ग्लभाषायामुपनिबद्धः ग्रन्थः थाईदेशीया रामकथायाः पञ्चविंशतिसर्गात्मकत्वेन परःसहस्रपद्यात्मकेन **'रामकीर्तिमहाकाव्य'** - त्वेनोपनिबन्धनञ्च।

सत्यव्रतशास्त्रिमहाभागानां पितृचरणाः महावैयाकरणा अभिनवपाणिनिरिति विरुदेन सुविख्याताः पण्डितचारुदेवशास्त्रिणः लवपुरस्थस्य डी.ए.वी.कालेजे संस्कृतस्य प्राध्यापका आसन्। सम्पूर्णाऽपि अष्टाध्यायी अमरकोषश्च तत्प्रेरणयैव सत्यव्रतशास्त्रिभिः कण्ठस्थीकृतौ सम्यगधिगतौ च। पितृचरणानामेव प्रेरणया एते आङ्ग्लभाषायाः सम्यगध्ययनं विधाय तत्रापि स्वकीयमप्रतिमं सामर्थ्यं ग्रन्थरचनादिमुखेन प्राकाशयन्।

मध्यमापरीक्षायां 'भवितव्यानां द्वाराणी'ति महाकवेः कालिदासस्य सूक्तिवचनं चरितार्थतामलभत जीवने एतेषाम्। मध्यमापरीक्षायामासीत् प्रधानविषयः व्याकरणम्। अन्ये अवान्तरविषया अप्यासन् परीक्षायामस्यां निर्धारिताः। तेषु नक्षत्रशास्त्रमित्येकः। तत्कृते होराशास्त्रमिति ग्रन्थः नासीदेतेषां उपलब्धः। परीक्षायाः मध्ये होराद्वयात्मकः यः समयान्तरालः एभिरुपलब्धः तस्मिन्नेव काले कस्यापिच्छात्रस्य होराशास्त्रपुस्तकेन कतिपयानि पद्यानि कण्ठस्थीकृत्य तदर्थं चावगम्य परीक्षायां प्राविशन्। प्रश्नपत्रे स एव विषयः प्राश्निकेनासीदुपस्थापितः। होराशास्त्रविषये होराद्वयकालेन यदधीतं तदेवोपस्थाप्य परीक्षा समुत्तीर्णा। भाग्यं फलति सर्वत्रेत्येषा उक्तिरत्र अवितथत्वेन चरितार्थतामगात्।

प्राच्यप्रतीच्योभयविद्याध्ययनक्रमेण परीक्षाः समुत्तीर्य एभिः दिल्लीस्थे हंसराजकालेजे संस्कृतप्राध्यापकपदे नियुक्तिः सम्प्राप्ता। हंसराजकालेजे प्राध्यापयन्तोऽप्येते कक्षा अध्यापयन्ति स्म दिल्लीविश्वविद्यालये। तदनन्तरमेते दैवानुकूल्यात् कुरुक्षेत्रविश्वविद्यालये वरिष्ठसंस्कृतप्राध्यापकपदे

नियुक्तिमलभन्त। तत्रासन् प्राश्निकरूपेणोपस्थिताः होशियारपुरस्थस्य वैदिकशोधसंस्थानस्य निदेशका आचार्या विश्वबन्धुमहाभागा येभ्यः अधिका अङ्काः लवपुरस्थस्य विश्वविद्यालयस्य स्नातकपरीक्षायां शास्त्रिमहाभागैः प्राप्ता आसन्। एतदेवाधिगम्य प्राश्निकैः प्रश्नोऽपि नोपस्थापितः कोऽपि; मौनमेवावलम्बमानानामेतेषां विनयवतां पदेऽस्मिन् तत्र नियुक्तिः सञ्जाता।

**'क्षणशः कणशश्चैव विद्यामर्थञ्च चिन्तयेदिति'** उक्तिरेतेषाम् आङ्ग्लभाषाभ्यासक्रमविषये चरितार्थतामायाति। नासीदेतेषां कश्चनाप्यभ्यास आङ्ग्लभाषायाः। पितृचरणा एतेषामासन् आङ्ग्लभाषाविज्ञाः। तैरेते आङ्ग्लभाषां प्रति प्रेरिताः। बहुना परिश्रमेणैभिः मैट्रिक्युलेशनपरीक्षा आङ्ग्लभाषामाध्यमेनैव समुत्तीर्णा छात्रवृत्तिरप्यधिगता। वर्षद्वयावधिकेनैव कालेन एभिः महानधिकारोऽधिगत आङ्ग्लभाषायम् इति संस्कृतज्ञानां संस्कृतमात्रैकपरायणानां प्रेरणायै अत्रोल्लिख्यते।

१९४७ वर्षस्य अतिविषमे भारतविभाजनकाले दैववशाद् एते स्वपितृचरणैः सह ग्रीष्मावकाशे सम्प्राप्ता आसन् स्वकीये होशियारपुरमण्डलान्तर्गते पैतृके 'अहियापुरग्रामे'। अस्मिन्नेवान्तराले हिन्दूमुसलमानयोर्मध्ये महानुपप्लवः सञ्जातः। दावाग्निरूपेण प्रसृतेऽस्मिन् उपप्लवसमये लवपुरं प्रति प्रतिप्राप्तिर्नासीत् सम्भवा। एतेषां पितृचरणानां सर्वेऽपि ग्रन्थाः लवपुरस्थगृहे एवासन्। तैः यथाकथञ्चिद् दुर्दिनेऽस्मिन्नपि लवपुरं गत्वा ग्रन्था आनीताः सैनिकानां साहाय्येन। दैवानुकूल्यात् १९४८वर्षे अम्बालानगरस्य डी.ए.वी.महाविद्यालये पितृचरणैरेतेषाम् अध्यापनकार्यं पुनरपि प्रारब्धम्। समय एष आसीद् दुष्करतमः शास्त्रिवर्याणां जीवनक्रमे। सर्वविधाभावाक्रान्तिकालेऽस्मिन् अत्यन्तं काठिन्येन पैतृकं जीर्णमपि निवासं परिष्कृत्य यथाकथञ्चित् कश्चित् कालो यापितस्तत्रैभिः।

१९५१ वर्षे जालन्धरनगरे एम.ए. कक्षायाम् अध्ययनार्थं सम्प्राप्ताः शास्त्रिमहाभागाः। किन्तु प्रतिग्रीष्मावकाशं वाराणसीं प्राप्य तत्रत्येभ्यः श्रीशुकदेवझाशर्मभ्यः शास्त्राध्ययनं कुर्वन्ति स्म। अनपत्या गुरुचरणाः एतानध्यापयन्ति स्म अपत्यप्रीत्या परिश्रमेण। कथयन्ति स्वयमेव शास्त्रिवर्या एवम् – "वाराणसीनिवासकालेऽहं नानागुरुभ्यः शास्त्राण्यशीलयम्। पूर्वाह्णे सन्यासिसंस्कृतमहाविद्यालयं गत्वा पण्डितमहादेवोपाध्यायेभ्यः काव्यशास्त्रमपाठिषम्, अपराह्ण एकवादने पण्डितशुकदेव-झाशर्मभ्यस्तद्गृहमुपेत्य व्याकरणशास्त्रं सायञ्चोदासीनपीठं प्राप्य स्वामिसुरेश्वराचार्य्येभ्यो वेदान्तमध्यगीषि। एवम् एकस्मिन्नेव दिने मम नाना शास्त्राध्ययनं प्रावृतत्। न केवलं विविधशास्त्राध्ययनम् एवापितु गमनागमनयोरपि मम भूयानायासोऽभूत्। तथापि क्षणशो विद्यां चिन्तयेदिति सिद्धान्तं परिपालयन् विद्योपार्जनैकदृगहं नायासमन्वभूवम्। प्रसन्नेऽन्तरात्मनि सत्यप्यायासे तद्बोधो मे नाभूत्। यत्किञ्चिदहं सम्प्रति जानामि तत्तस्यायासस्यैव फलम्। कया गिरा तानहं गुरूनभिष्टुयाम्। ते ह्यासन् शेवधयो विद्यानां निधयश्च गुणानाम्। तैरहं शिष्यत्वेन स्वीकृत इति परमं मे भागधेयम्।"

सर्वाण्यपि शास्त्राणि शुकदेवझाशर्ममहोदयानां कण्ठगतान्यासन्। सम्पूर्णमपि महाभाष्यं तैरधीतवन्त इमे गभीरतया। अनितरसाधारणमासीत् तेषां पाण्डित्यम्। जालन्धरतः एम.ए. इत्येनमुपाधिं सम्प्राप्य काशीहिन्दूविश्वविद्यालये पीएच्.डी. उपाधये प्रवेशं गृहीत्वा **'भर्तृहरिदृष्ट्या दिक्कालमीमांसा'** इत्यस्मिन् शोधविषये शोधकार्यं शास्त्रिवर्याः प्रारभन्त।

शोधकार्यार्थं वाक्यपदीयमध्येतव्यमिति राजकीयसंस्कृतमहाविद्यालयस्य संस्कृतप्राध्यापकान् पण्डितरघुनाथशर्ममहाभागानुपगता इमे। काशीहिन्दूविश्वविद्यालयादतिदूरं स्थिते कबीरचौरास्थाने निवसद्भी रघुनाथशर्ममहाभागैः ग्रन्थग्रन्थिभेदेन अत्यन्तं दुरूहं वाक्यपदीयम् अध्यापितम्। अध्यापनात् पूर्वमाचार्यचरणैः विद्योपार्जनलालसा सुपरीक्षिता एतेषां येन केनापि मिषेण बहुधा अध्ययनाय गृहं प्राप्तानप्येतान् पराकृत्य। **'पात्रप्रतिगता विद्या पात्रप्रतिगतं धनम्'** इति प्राचीना उक्तिरत्र चरितार्थतामगात्। शर्ममहाभागाः समयमनाकलय्य अनवरतं पाठयन्ति स्म होरात्रयम्। छात्रत्वेनोपस्थिताः शस्त्रिवर्याः श्रान्तिमनुभवन्ति स्म, न पुनः विषयोद्भेदनक्रमे प्रवर्तमानाः गुरवः पण्डितश्रीरघुनाथशर्माणः। शिष्यानुरागोऽप्यासीत्तथैव स्वगुरौ। एकदा मध्ये मध्यरात्रमाकारितः शिष्यः शैत्यमनाकलय्य छात्रावाससंरक्षकाणामनुमतिं यथाकथञ्चिदधिगम्य द्विचक्रिकामारुह्य गरुचरणं प्राप्नोति ततः निर्देशमुपलभ्य प्रत्यागच्छति छात्रावासं गुरुगृहादतिदूरस्थं पुनरपि। नाहं पाठयिष्यामि कतिपयं दिवसं यावत् स्वगृहं प्रति गमनोद्योगादित्येवासीत् तेषामादेशः।

१९५५ वर्षे काशीहिन्दूविश्वविद्यालयतः शोधकार्यं समाप्य अम्बालानगरं प्रति प्रस्थितैः शास्त्रिमहाभागैः दिल्ल्यां यात्रां स्थगयित्वा हंसराजकालेजस्य प्राचार्यैः गोवर्धनलालदत्तैः सम्पर्कः संस्थापितः। तेषामनुमत्या तत्रैव संस्कृताध्यापनक्रमः समारब्धः। संस्कृतविभागाध्यक्षाः नासीदधिकमनुकूलाः। वर्षानन्तरं नियुक्तेः सम्पुष्टिकाले विभागाध्यक्षेण शास्त्रिमहाभागानां नियुक्तेः सम्पुष्टिर्न विहिता। एतैरध्यापितानां छात्राणां परीक्षापरिणामः अत्यन्तम् उत्कृष्ट आसीदिति ज्ञात्वा प्रधानाचार्येण एतेषां नियुक्तेः सम्पुष्टिः स्वयमेव सम्पादिता।

प्रधानाचार्यमहाभागाः भौतिकशास्त्रस्य प्राध्यापका आसन्। तैरस्मिन् विषये एका श्रुतिः समुद्धृता एतान् सम्बोध्य एवम् – श्रुतिराह 'मित्रादभयममित्रादभयं ज्ञातादभयमज्ञातादभयमि'त्यादि। तत्रामित्रादभयमिति तु बुद्धिमुपारोहति। कथं मित्रादभयं प्रार्थ्यतेऽत्र। यदि कश्चिन्मित्रं तर्हि तस्माद् भयं न भवेदेव। यावत् शास्त्रिवर्याः प्रश्नमिमं समादधति तावत्तैः स्वयमेवोक्तमित्थम् -

'यदि मित्रं प्रतिकूलतां याति तर्हि यावतीं हानिं स कर्तुं शक्नोति न तावतीममित्रम्। तस्मात्तु वयं सावधाना एव। मित्रं पुनर्द्वितीयमिव हृदयं भवति। गुह्याद् गुह्यतरमपि रहस्यं स जानाति। तदुद्भेदे जनस्य सर्वथा विनाश एव। अत उक्तं मित्रादभयमिति। न केवलमिदमेव। अमित्रादभयमित्यतः पूर्वं तदुक्तम्। एतद् व्याख्यानं श्रुत्वा चमत्कृत इवाहमभूवम्। नातः पूर्वमयं विषयो मया विचारितोऽपि।'

यन्निषेधं विना स्वास्थ्यस्य गतिर्नास्ति तन्निषेद्धव्यमित्यपि तैरुपदिष्टः स्वास्थ्यस्य रहस्यविशेषः।

दैवानुकूल्येनैव समपद्यत एतेषां सौभाग्यवत्या उच्चशिक्षाविभूषितया शीलसंस्काराभ्यां सम्पन्नया उषःसंज्ञया कन्यकया उपयमः लक्ष्मणपुरस्थया। स्नातकोत्तरकक्षायाम् अनया संस्कृतविषयमधीत्य पीएच्०डी० शोधोपाधिरप्युपलब्धो विवाहानन्तरम्।

संस्कृतज्ञाः पुस्तकीभवन्तीति वचनं शास्त्रिमहाभागानां विषये चरितार्थमभवत्। संस्कृतग्रन्थानां

पत्रपत्रिकाणाञ्चास्ति एतेषु महान् संग्रहः। सम्प्रत्यपि संस्कृतपत्रिकाणां प्रकाशनाय अनुदानमेभिर्दीयते मुक्तहस्तेन। संस्कृतपत्रिकाणां प्रकाशनमनुभूय एभिरुच्यते –

**लेखस्य कष्टं च धनस्य कष्टं कष्टं तथा मुद्रणसंविधायाः।**
**संचालनं संस्कृतपत्रिकाणामसंशयं कष्टपरम्परैव।।**

१९५७ वर्षे कुरुक्षेत्रविश्वविद्यालये वरिष्ठप्राध्यापकपदे एतेषां नियुक्तिः संजाता। नवीनोऽसौ विश्वविद्यालयः प्रथमश्चासौ संस्कृतविभागः। स्थापनादारभ्य तत्रगतेः सम्पूर्णमप्यासीद् दायित्वमेभिः वोढम्। कुरुक्षेत्रं नासीदनुकूलमेतेषां कृते। तत्परित्यज्य एते दिल्लीं प्रति प्रस्थिताः। दिल्लीविश्वविद्यालयस्य संस्कृतविभागे प्रवाचकपदे कृतावेदना अप्येते प्रवक्तृपदे नियुक्तिमलभन्त। दिगन्तविश्रान्तयशसां शास्त्रपारावारपारदृश्वनां तत्रस्थानां तदानीन्तनानां कुलपतिमहोदयानां दैवानुकूल्यं वचः सम्प्रत्यपि स्मरन्त्येते महाभागा एवम् – "भवतो विषये तु यथाऽहं पश्यामि भवांस्तत्सर्वमप्युत्कृष्टतममधिगमिष्यति यन्नियत्या भवदर्थे कल्पितं भवेत्।" (As for you, I am sure you will get all the very best that destiny has to offer you)

एतेषां नियुक्तिसमये दिल्लीविश्वविद्यालयस्य संस्कृतविभागे नासीच्छात्राणां संख्या भूयसी। एतेषामध्यापनाध्ययनोद्योगेन संस्कृताध्येतॄणां छात्राणां संख्या वृद्धिमगात्। एतन्नियोक्तॄणां विभागाध्यक्षाणाम् आचार्यनरेन्द्रनाथचतुर्धुरीणानां साहाय्यं विदधद्भिरेभिः संस्कृतविभागस्य सम्पूर्णा प्राशासनिकी कार्यपद्धतिः सम्यगधिगता। १९६९ वर्षे प्रोफेसरपदमधिगम्य एभिः संस्कृतविभागस्य विभागध्यक्षपदमप्यलङ्कृतम्। तत्रस्थैः प्राध्यापकैः आचार्यरसिकविहारिजोशिमहाभागैः सह आसीदेतेषां प्रतिद्वन्द्वः। जोशिमहाभागा वरिष्ठा आसन् रीडरपदनियुक्तिक्रमे कार्यवाहकाध्यक्षाश्चासन् चौधुरीमहाभागानां सेवातो निवृत्तेरनन्तरम्। चौधुरीमहाभागानां सेवानिवृत्तेरनन्तरं मुम्बईतः समागतानामाचार्यमाइणकरमहाभागानां प्रोफेसरपदे नियुक्तिः सञ्जाता तत्प्रभावेण च संस्कृतविभागस्य स्थायिविभागाध्यक्षत्वेन। किञ्चित्कालानन्तरं माइणकरमहोदया अन्यत्र नियुक्तिं लब्ध्वा विभागतः प्रतिनिवृत्ताः, जोशिमहाभागाश्च मैक्सिकोदेशं प्रति प्रस्थिताः, शैक्षणिकमुद्योगं कमपि तत्र स्वीकृत्य। १९६९ वर्षस्य अक्तूबरमासे दिल्लीविश्वविद्यालयस्य संस्कृतविभागस्य आध्यक्ष्ये अस्थायित्वेन नियोजिताः शास्त्रिवर्याः।१९७० वर्षस्य अगस्तमासे एते प्रोफेसरपदे नियुक्ताः। तत्रासीत् कारणमेतेषामप्रतिमा शास्त्रविषयिणी व्युत्पत्तिः। १९७० वर्षस्य सितम्बरमासस्य एकादशतारिकायां शस्त्रिवर्याणामभिनन्दनमभवद् विभागाध्यक्षपदग्रहणमभिलक्ष्य। समारोहेऽस्मिन्नेभिः संस्कृतपद्यमयी स्वकीया कार्यवृत्तयोजना प्रकाशिता विभागस्य उन्नत्यै एवम् –

**सुहृद्वर्यैर्विपश्चिद्भिर्भाषणार्थं निमन्त्रितः।**
**श्लोकैः कतिपयैरेव वचः स्वं वक्तुमुद्यतः।।१।।**

**परीवारेण मम यो मयि स्नेहः प्रदर्शितः।**
**कृतज्ञताभराक्रान्तस्तेनास्मि सुखितो भृशम्।।२।।**

**स्निग्धोऽस्मि भवतां स्निग्धा भवन्तः सर्व एव मे।**
**स्नेहः परस्परमयं प्रत्यहं वृद्धिमश्नुताम्।।३।।**

**संस्कृतस्य प्रचाराय बद्धोद्योगा वयं समे।**
**उन्नतिं हि गिरस्तस्याः सन्ततं कामयामहे।।४।।**

**विभागविषये साध्वी व्यवस्था सम्प्रवर्तताम्।**
**एतदर्थं भवत्साह्यव्यपेक्षा सुतरां मम।।५।।**

**सर्वे सञ्चिन्त्य सञ्चिन्त्य कार्यं कुर्याम शोभनम्।**
**दृढं संग्रथिता भूत्वा सूत्रे मणिगणा इव।।६।।**

दिल्लीविश्वविद्यालयस्य प्रोफेसरपदे नियुक्तेः पूर्वमेभिः सम्प्राप्ताऽसीन्नियुक्तिः काशीहिन्दूविश्वविद्यालयस्य संस्कृतविद्याधर्मविज्ञानसङ्कायस्य प्रोफेसरपदे। पितुराज्ञां शिरोधार्य नियुक्तिरेषा एभिः सविनयं त्यक्ता दिल्लीविश्वविद्यालये प्रोफेसरपदमधिगत्य।

विभागाध्यक्षरूपेण एभिः **'इण्डोलाजिकल स्टडीज'** नाम्न्याः संस्कृतविभागीयायाः शोधपत्रिकायाः प्रकाशनं समारब्धम्। संस्कृतविभागे संस्कृतनाट्योत्सवस्य संस्कृतकविगोष्ठीनाञ्च आयोजनस्य एतेषां सदुद्योगेन कश्चन उपक्रमः सञ्जातः। संस्कृतनाट्यप्रयोगे एते संस्कृतपद्यमयं स्वागतभाषणं कुर्वन्ति स्म आङ्ग्लभाषायां नाट्योत्सवसंक्षेपमपि उपस्थापयन्ति स्म तत्कथायाः अनभिज्ञेषु प्रचाराय।

एभिः प्रथमवारं संस्कृतयोषित्कवीनां महत्सम्मेलनं समायोजितम्। अनुत्साहैः संस्कृतज्ञैः प्रथमं नानुमोदितमेतत् किन्तु - क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेद् - इति महाकविकालिदासवचनप्रामाण्याद् एते अत्यन्तं साफलीं लेभिरे आयोजनेऽस्मिन्।

संस्कृतनाट्यप्रयोगोद्घाटनप्रसङ्गे एभिः बर्लिननगरस्थस्य अलेग्जेण्डर फान हूम्बाल्ट विश्वविद्यालीयस्य भारतीयविद्यासंस्थानस्य निदेशका विद्वच्छिरोमणयः वोल्फगांगमार्गनराथमहाभागाः आमन्त्रिता आसन्। कार्यक्रमेऽस्मिन् मूर्धाभिषिक्ताः रामचन्द्र-नारायण-दाण्डेकरमहाभागा अप्यासन् आमन्त्रिताः। नाट्योत्सवस्य उद्घाटनाय मुख्यकार्यकारिपार्षदाः श्रीराधारमणमहाभागा मुख्यातिथिरूपेणामन्त्रिता आसन्। अवसरेऽस्मिन् शास्त्रिमहाभागैः समेषामभिनन्दनं विलक्षणेन पद्यात्मकेन स्ववक्तव्येन उपस्थापितम् –

**योरूपभूमाविटलीतिनामा ख्यातिं गतो देशविशेष एकः।**
**गतोऽहमासं गतवर्ष एव तत्र स्वराष्ट्रप्रहितः सुखेन।।१।।**

**ट्यूरीनपुर्यां खलु तत्र देशे दिग्भ्यो विदिग्भ्यः समुपागतानाम्।**
**बभूव सप्ताहमतीव रम्यं सम्मेलनं संस्कृतपण्डितानाम्।।२।।**

**उपस्थितोऽत्रान्यतमोऽयमेषु ख्यातिं गतो मार्गनराथनामा।**
**शास्त्रेष्वधीती निपुणप्रतीतिर्विपश्चितां प्राग्रहरस्तदाऽऽसीत्।।३।।**

**श्रीबापनाम्ना पिशलेन चापि विदां वरेण्येन च वेबरेण।**
**आचार्यपीठं जगति प्रसिद्धमध्यासितं विज्ञवरैर्यदास्त।।४।।**

तदेव विद्वानधुनैष सौम्योऽध्यास्तेऽतिसूक्ष्मेक्षिकयोपपन्नः।
विद्वद्वराणां धुरि कीर्तनीयः कीर्तिं गतश्चापि परां जगत्याम्।।५।।

ट्यूरीनपुर्यां प्रथमं बभूव विपश्चितैनेन मदीयसंगः।
आभाषणं चापि बभूव तत्र क्षणान् प्रगाढं कतिचिन्मनोज्ञम्।।६।।

सम्बन्धमाभाषणपूर्वमाहुरित्येतदाख्यत् कविकालिदासः।
वचो यथार्थं सुतरां तदस्ति क्रान्तं कवेर्दर्शनमत्र भाति।।७।।

सम्बन्ध आभाषणपूर्वकोऽभूद् विपश्चितैनेन ममापि तत्र।
सम्बन्धबन्धे सति च प्रजातं मैत्र्यं मनोमोदकरं प्रकामम्।।८।।

मैत्र्येण तेनैव हृदि स्थितेन मुख्यातिथित्वाय निमन्त्रणं स्वम्।
प्रादामहं विज्ञवराय चास्माययं च तत्सत्वरमभ्युपागात्।।९।।

सोऽयं सुधीवर्य उपस्थितोऽस्मास्वद्येति सत्यं कृतिनो वयं स्मः।
सत्संगतिः पुण्यवशेन जाता कृतार्थतां निश्चितमादधाति।।१०।।

१९७६ वर्षस्य नाट्योत्सवस्यापि स्वागतवक्तव्यं पद्यमयमासीत् शास्त्रिवर्याणामेवम् –

समेभ्योऽत्रभवद्भ्योऽत्र सादरं प्रणताञ्जलिः।
नाट्योत्सवे सुरम्येऽद्य स्वागतं व्याहराम्यहम्।।१।।

उत्सवोद्घाटनार्थाय स्वीकृत्य प्रार्थनां हि नः।
रवीन्द्राख्या विदां वर्या अस्मास्वद्य समागताः।।२।।

सम्प्रति किञ्चिदुच्यते वचनं सुधियो विभावयन्तु तदु।
आयोज्यते त्रिदिवसोऽस्माभिर्नाट्योत्सवो ह्येषः।।३।।

त्रिष्वहःसु प्रयोक्ष्यन्ते रूपकाणि नवात्र वै।
तानि सन्तो निरीक्षन्तां सदसद्व्यक्तिहेतवः।।४।।

अभिनेत्र्योऽभिनेतारः सर्वेऽस्मच्छात्रका इह।
कुशीलवकलायां हि न तेषां कौशलं भवेत्।।५।।

तथाऽपि कृतयत्नास्ते स्वं प्रयत्नं भवत्पुरः।
समुपस्थापयिष्यन्ते भवन्मोदो भवेद्यतः।।६।।

इत्याशंसन् बुधा नात्र विषये बहु वच्म्यहम्।
सर्वेभ्योऽपि भवद्भ्योऽत्र स्वागतं व्याहरामि च।।७।।

आङ्गल्या वाचाऽधुना विज्ञा वचोऽहं स्वं प्रवर्तये।
मुख्यातिथीनामन्येषां सौकर्यं परिलक्षयन्।।८।।

**कविराजशेखरवच उद्धृत्याहं समापये स्ववचः।**
**उक्तिविशेषः काव्यं भाषा या भवति सा भवतु।।९।।**

गुरुगोविन्दसिंहचरितमहाकाव्यस्य रचनायां दैवस्य आनुकूल्यं प्रमाणयन्ति शास्त्रिवर्या आत्मेतिवृत्ते। एभिर्महाभागैः रामायणभाषापरिच्छेदविषयकः स्वकीयः अभिनवग्रन्थः **'दि रामायण – ए लिंग्विस्टिक स्टडी'** इति नामधेयः यदा पंजाबीविश्वविद्यालयस्य कुलपतिमहाभागाय श्रीकृपालसिंहनारंगमहोदयाय उपायनीकृतस्तदा कुलपतिमहोदयैः एतेषां विषये डा०सुनीतिकुमार-चटर्जीमहोदयैः ग्रन्थप्रशंसायां लिखितं यदेते परिनिष्ठिता संस्कृतकवय इति तत्पठितम्। एतेषां काव्यरचनानैपुण्यमवधार्य कुलपतिमहोदयैरेते विनिवेदिताः - 'किं कर्मण्येकस्मिन् भवानस्मत्सहाय्यं विदध्यात्।'

'भवदादेशं प्रतीक्ष' इति शास्त्रिवर्याणामुत्तरं श्रुत्वा तैः पुररुक्तम्–

'आगामिनो जनवरीमासस्य (१९६७ वर्षे) सप्तदशो दिवसो गुरुगोविन्दसिंहस्य जन्मनस्त्रिशतीपूर्तिवत्सरः। तस्मिन्नवसरे वयं गुरोश्चरितं नानाभाषाभिरुपनिबन्धुमीहामहे। तेषु संस्कृतेनाप्युपनिबद्धं यदि तत्स्यात् तत्रापि च काव्यरूपेण, तदस्माकमीप्सितत्तमम्। नानाभाषोपनिबद्धान् गुरुचरितग्रन्थान् वयं भारतशासनस्य राष्ट्रपतिभ्यो डा.सर्वपल्लीराधाकृष्णन्-महाभागेभ्यः समर्पयितुमीहामहे। तेषु संस्कृतपद्यबद्धो गुरुचरितग्रन्थस्तेभ्यो विशेषेणाभिरोचेत। तं ग्रन्थं भवान् अस्मत्कृते निबध्नात्विति।'

शास्त्रिवर्यैः गुरुग्रन्थकथा तद्विषयकाश्च अन्ये समीक्षाग्रन्था आसादिताः। तत्पठने रात्रिन्दिवं व्यधाय्येभिः अक्टूबरमासस्य प्रथमदिवसादारभ्य दिसम्बरमासपर्यन्तं महाकाव्यममिदं पूर्तिमानायि। गुरोः प्रसाद एष इति स्वीकुर्वद्भिराचार्यचरणैः पद्यमेतदादावेवोपनिबद्धं महाकाव्यस्य–

**तस्य प्रभोर्ब्रह्ममयस्य पुंसः कः शक्नुयाद्वर्णयितुं चरित्रम्।**
**तथाऽपि तद्गौरवमेव मां तच्चरित्रगाने मुखरीकरोति।।**

मुद्रितस्यास्य गुरुगोविन्दसिंहचरितमहाकाव्यस्य प्रतिः जनवरीमासस्य सप्तदशे दिवसे राष्ट्रपतिमहाभागेभ्यः समर्पिता। एकवर्षाभ्यन्तर इदमेव काव्यं दिल्लीस्थया सहित्यअकादेमीसंस्थया साहित्यअकादमीपुरस्कारेण पुरस्कृतमासीत्। आसीदसौ प्रथमः राष्ट्रियः पुरस्कारः शास्त्रिवर्याणाम्।

एतेषां विदेशयात्राक्रमः १९७५ वर्षे इटलीदेशे टोरीननगरे समायोजिताद् विश्वसंस्कृत-सम्मेलनादारब्धः। सम्मेलनानन्तरं शर्मण्यदेशस्य (जर्मनी) यात्रापि एतैः सम्पादिता, अस्मिन्नेव यात्राप्रसङ्गे विश्वसंस्कृतसम्मेलने विलक्षणं शोधपत्रमेभिः समुपस्थापितमासीद् यत्र संस्कृतपर्यायवाचिनः शब्दाः समानार्थका न भवन्तीति प्रमाणितमेभिः सोदाहरणं सोपपत्तिकञ्च। एतेषां मते वाल्मीकिरामायणे अनेकेषां पर्यायवाचिनां सहप्रयोगः समुपलभ्यते। तद्यथा – 'स पपात हतो भूमौ विटपीव महाद्रुमः, तां विनाऽथ विहंगोऽसौ पक्षी प्रणदितस्तदा, वने वनेचरांश्चान्यान् खेचरांश्च विहंगमान्, विराजयन्ती तं देशं विद्युत्सौदामनी यथा, रराज राजपुत्री सा विद्युत् सौदामनी यथा, काञ्चनाभं नभश्चक्रे विद्युत्सौदामनी यथा' इत्यादीनाम्।

शोधपत्रवाचनानन्तरं एतेषां शोधपत्रविषये या होराद्वयपरिमिता महती चर्चा सञ्जाता तेन सम्मेलनशोधपत्रप्रस्तुतिसम्बन्धिनी सम्पूर्णाऽपि व्यवस्था व्यवच्छिन्ना अभूत्। कोषकाराः येषां शब्दानां समानार्थकतामुद्घोषयन्ति तत्रापि भवत्येव तत्त्वतो भेद इति उदाहरणततिभिरेभिः सम्यक्प्रतिपादितं शोधपत्रेऽस्मिन्। अनेनैव शोधपत्रेण एतेषां ख्यातिः अन्ताराष्ट्रियसंस्कृतक्षेत्रे अभूत्।

अतः परं सम्पादितायाः शर्मण्यदेशस्य यात्रायाः सम्पूर्णोऽपि वृत्तान्त एभिः पद्यरूपेणोपनिबद्धः – **'शर्मण्यदेशः सुतरां विभाति'** इत्यस्मिन् स्वकीये काव्ये।

१९७७ **वर्षे** फ्रान्सदेशस्य पेरिससमाख्यायां राजधान्यां समायोजिते विश्वसंस्कृतसम्मेलने समुपस्थिता आसन् शास्त्रिवर्याः। ततः एते पूर्वपश्चिमशर्मण्यदेशद्वयकं, पोलेण्डदेशं, हंगरीदेशं इटलीदेशञ्च भाषणाय सम्प्राप्ताः। अस्मिन्नेव समये एभिः बैकांकनगरे अभ्यागताचार्यरूपेण-कार्यकरणार्थमामन्त्रणमुपलब्धम्। यूरोपयात्रां शीघ्रं समाप्य राष्ट्रं प्रत्यागतैरेभिः १९७७ वर्षस्य अक्टूबरमासस्य सप्तमतारिकातः प्रारब्धा स्वकीया बैकांकनगरस्य द्विवर्षात्मिका यात्रा। आग्नेयभूखण्डस्य थाइलैण्डदेशे स्थिते अस्मिन् नगरे आसीत् संस्कृताध्यापनकेन्द्रं शिल्पाकरविश्वविद्यालये यत्र प्रवर्तते पीएच्.डी. इत्युपाधिपर्यन्तं संस्कृताध्ययनम्। अत्रास्ति भूयसी संख्या भारतीयानाम्। अनेकधर्मानुनायिनः अत्र सामरस्येन निवसन्ति। अत्र विष्णुमन्दिरं, गुरुद्वारा, आर्यसमाजमन्दिरादीनि देवस्थानानि विराजन्ते। मन्दिरे कबीर-तुलसीदास-सूरदासादीनां सन्तशिरोमणीनां चित्राणि अङ्कितानि सन्ति। तत्र देवस्थाने प्रवचनं भवति। शास्त्रिमहाभागैः रविवासरे गीताप्रवचनं विहितं हिन्दूधर्मसभाप्रधानानुरोधेन। गीताश्रम आसीत् तत्र बैकांकनगरे यतः 'गीतासन्देश' नाम्नी पत्रिकाऽपि प्रकाश्यते। तत्र प्रकाशिताः सन्ति शास्त्रिवर्याणां नैके निबन्धाः गीतातत्त्वावबोधकाः। संस्कृतज्ञानाय समर्पितभावना थाइदेशस्य राजदारिका एभिरध्यापिता। अध्यापनक्रमे कानिचन पद्यानि स्वरचितानि एभिरुपस्थापितानि -

**अस्त्येशियानामनि सुप्रसिद्धे**
**द्वीपे विशालेऽतिविशालकीर्तिः।**
**आग्नेयदिङ्मण्डलमौलिभूतो**
**देशोऽतिरम्यो भुवि थाइलैण्डः।।**

**श्यामेति नामातिपुराणमस्य**
**ख्यातं पुराणादिषु यद्विहाय।**
**थाईतिजात्यध्युषितत्वहेतो-**
**र्यं थाइलैण्डं कथयन्ति लोकाः।।**

**राजा प्रजारञ्जनमादधानः**
**सर्वात्मना बुद्धवचःप्रमाणः।**
**अतुल्यतेजःपदवीं दधानः**



**प्रशास्ति यं भूमिबलाभिधानः।।**

**अकृष्टपच्यं बहु यत्र सस्यं**
**रम्यास्तथा शाद्वलभूमिभागाः।**
**मन्दं प्रवान्तश्च यदीयवाता**
**आगन्तुकानां रमयन्ति चेतः।**
**देशस्य तस्यास्ति भृशं विशाला**
**कण्ठे भुवः शुभ्रतरेव माला।**
**ऐश्वर्यसौन्दर्यविलासधानी**
**बैंकाकनाम्नी खलु राजधानी।।**

उक्तं च परिद्यवि सायाह्ने भवद्देशविषये रचितानि मयेमानि पद्यानि राष्ट्रियसंग्रहालये पाण्डुलिपिविभागध्यक्षाज्ज्ञात्वा यत् थाईदेशविषये संस्कृतेनोपनिबद्धः प्रकाशितो मातृकारूपो वा नैकोऽपि ग्रन्थोऽस्ति, भवद्भिरेव च स निबद्धव्यो भवेदित्युत्स्मयामानस्य तस्य वचः श्रुत्वा। तद्ग्रन्थप्रारम्भरूपाणीमानि पद्यानिसस्वरं प्राचीनपद्धत्या प्रस्तुतानि राजकुमार्यायत्यन्तमरोचन्त प्राह च सा ग्रन्थमिमं काव्यरूपं निबध्नन्तु भवन्तः, अहमिमं थाईभाषयाऽनुवदिष्यामीति।

सैषा एतेषां कृते अतर्कितोपनता प्ररोचना आसीत्। संस्कृतभाषया थाईदेशस्य वैशिष्ट्यं प्रकाशयितुं 'थाइदेशविलासम्' इति नाम्ना स्वतन्त्रमेकं काव्यं विरचितम् एभिः। काव्यमेतत् राजदारिकया कृतेन थाइभाषानुवादेन सह पश्चात् प्रकाशतामगात्।

थाइदेशस्य सर्वेऽपि चक्रिराजवंशपुरुषाः 'राम' इति नाम्ना ख्याता आसन्। साम्प्रतिको नृपालो अतुल्यतेजा नवमो रामोऽस्ति। अत्रत्या थाइभाषयोपनिबद्धा रामकथा 'रामकियन्नि'-ति नाम्नी (रामकीर्तिरिति संस्कृतरूपान्तरणमस्य) अत्यन्तं प्रसिद्धा बुद्धयोद्फेति नाम्ना विद्वच्छिरोमणिना रामप्रथमेन भूपेन विरचिता। इमामाश्रित्य शास्त्रिवर्यै रचितं 'श्रीरामकीर्तिमहाकाव्यम्'। सम्पूर्णेऽपि एशियाभूखण्डे येन केनापि रूपेणास्ति रामकथा व्याप्ता। वाङ्मये, चित्रकलायाम्, अभिनये, पुत्तलिकानृत्ये, लोककथास्वप्येषा रामकथा प्रचलिता। भगवता प्राचेतसेन मुनिना अस्या विषये पूर्वमेवोद्घोषितमस्ति-

**यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।**
**तावद् रामायणकथा लोकेषु प्रचरिष्यति।।**

दैवप्रभावादेव रामकथायाः प्रवर्तने प्रवर्तिता आसन् शास्त्रिवर्याः। वाल्मीकिरामायणाद् बहु भिद्यते थाइदेशरामचरितम्। एतदनुचिन्त्य सत्यव्रतशास्त्रिमहाभागैः कृतमस्य संस्कृतभाषायां प्रकाशनम् अनुसन्धित्सूनां कृते सम्प्रत्यपि अमृतायते।

थाइदेशे स्थितानामनेकेषामभिलेखानां संस्कृतपद्यबद्धानां प्रस्तरखण्डेषु थाइभाषायामुत्कीर्णानां संस्कृतरूपान्तरमपि आचार्यवर्यैः विहितं, येन समुद्घाट्यते देशस्यास्य महती काव्यसमृद्धिः। नानावृत्तेषु कतिपयेष्वभिलेखेषु यमकानुप्रासदृष्टान्तोपमोत्प्रेक्षार्थान्तरन्यासादीनामलङ्काराणां प्रयोगः सुतरामावर्जयति सहृदयानां चेतांसि। तद्यथा –

**नमध्वं हरदेहार्धहारिणीं हिमवत्सुताम्।**
**अम्बा न वेति साशङ्कं पश्यति स्म गुहोऽपि याम्।।**

प्रथमपङ्क्तिनिबद्धः हकारानुप्रासोऽत्र चमत्कृतिं जनयति। एवमेव सकारजकारयोरनुप्रासचमत्कारः प्रस्तूयते एवम् – **'यज्जाज्वलीति ज्वलनक्षमाम्भःभास्वन्नभस्वन्मृगवन्नभस्सु।'**

अलङ्कारेषु रुचिरस्योत्प्रेक्षालङ्कारस्योदाहरणमपि चमत्काराय सहृदयचेतसामत्र प्रस्तूयते एवम्–

**नमः शिवायास्तु शिवाय वो यो मन्ये शशांकानलसूर्यनेत्रः।**
**उष्णत्वशीतत्वसमत्वमीप्सुस्स्वास्ये बिभर्त्यद्भुतजह्नुजाताम्।।**

भारतवंशीयैरेव सन्ति एतानि पद्यानि विरचितानि तत्रस्थैः इति स्वीकुर्वन्ति शास्त्रिवर्याः। रामकीर्तिमहाकाव्यस्य लोकार्पणं शिल्पाकोर्नविश्वविद्यालयस्य प्रेक्षागृहे सञ्जातं महाराजकुमार्या आदेशात् २९ सितम्बर, २०१३ दिवसे सायं षड्वादने। आसीदसौ विशिष्टः कार्यक्रमः शासकीयः संस्कृतमहाकाव्यलोकार्पणमुखेन संस्कृतसंवर्धनविषयकः।

थाइदेशे कृताधिवासैः शास्त्रिमहाभागैः अनुसन्धानप्रसङ्गेन तत्र अनेकानि प्राचीनानि हिन्दूमन्दिराणि गमिकर्मीकृतानि अनेकानि स्थलानि थइदेशीयसंस्कृताभिलेखानुसन्धानान्वेषणप्रसङ्गेन च। थाइदेशे राजचिह्नं गरुडः, नरेशाश्चक्रिवंशीयाः, चक्री च भगवान् विष्णुः तद्वाहनञ्चास्ति गरुडः। थाइदेशकलाविभागस्य प्रतीकचिह्नमस्ति गणेशः। अस्य सर्वशुक्लो विग्रहः संस्थापितोऽस्ति तत्रस्थाया राष्ट्रियरङ्गशालायाः पुरतः। हिन्दूधर्मो थाइदेशे 'ब्राह्मणधर्म' इत्याख्यायते। थाइदेशे द्वितयेऽप्युत्सवा भारतीयाभ्यामुत्सवाभ्यां संवदतः। भारतीयः होलिकोत्सवः अत्र 'सौङ्क्रान्' समाख्यया प्रवर्तते।

आत्मकथात्मकेऽस्मिन् ग्रन्थे ७९प्रकरणादारभ्य १२२प्रकरणं यावत् शास्त्रिमहाभागैः १९७७ वर्षस्य अक्तूबरमासस्य सप्तमदिवसादारभ्य १९७९वर्षान्तं यावज्जायमानः थाइदेशयात्रानुभवः विस्तरेण उपनिबद्धोऽस्ति। स्वदेशं प्रत्यावृत्तैरेतैः कलासंकायाध्यक्षपदम् अलङ्कृतम्। संकायाध्यक्षरूपेण एभिरनेके नवीनाः सारस्वतोपक्रमाः संस्तुताः संकायस्य विकासाय। अस्मिन्नेव काले स्नातककक्षायाम् अनधीतसंस्कृतविषयायाः कस्या अपि छात्रायाः संस्कृताध्ययने अभिरुचिं पूर्ववर्तिनं संस्कृताध्ययनस्य तस्याः दृढं संस्कारञ्चावेक्ष्य संस्कृतस्य स्नातकोत्तरकक्षायां प्रवेशः एतेषां प्रशासनमतिचातुर्येणैव दिल्लीविश्वविद्यालये समपद्यत। प्रवेशस्य संस्तुतिरेषा कक्षाक्रमेण विहितं पूर्वाभ्यासं न प्रामाणयतेत्यद्भुतमेव।

१९८२वर्षस्य अक्तूबरमासे एते शर्मण्यदेशं प्रति प्रस्थिता अतिथिप्राध्यापकत्वेन नियुक्तास्तत्रस्थेन शासनेन। तत्रापरिचितेन एकेन भारतीयेन फ्रेंकफर्तवायुयानपत्तनात् ट्यूबिंगनगरं प्रति गमनप्रक्रियायां सर्वथा अनभिज्ञानामेतेषां महत् साहाय्यं विहितम्। आसीदसौ मिहिरसेन इति नाम्ना प्रसिद्धः भारतीयः येन ब्रिटिशचैनेल इत्याख्यो समुद्रः दोर्भ्यां प्रतीर्णः, तेन चासौ सम्पूर्णेऽपि भूतले प्रसिद्धिं गतः। ट्यूबिंगननगरस्य रामणीयकं शास्त्रिमहाभागैरेवमुपवर्ण्यते पद्येषु –

**योरूपभूमण्डलमध्यवर्ती पारं समुद्रैः परमभ्युपेतः।**

**नानानदीप्रस्रवणैः सुरम्यः शर्मण्यदेशः सुतरां विभाति।।**

विराजमानं गिरिमेखलासु सौन्दर्यमत्यद्‌भुतमादधानम्।
नेकारनद्या निकटे निविष्टं टयूबिंगनाख्यं पुरमस्ति तत्र।।

विराजितं पादपराजिभिर्यद् विभूषितं श्यामलभूमिभागैः।
अभ्रंलिहाग्रैर्भवनैरनेकैरलङ्कृतं नेत्रसुखं ददाति।।

आकीर्णपुष्पस्तबका वसन्ते दीर्घा अपूर्वां सुषमां दधानाः।
पूर्णैः फलानां तरुभिः प्रपूर्णा विभान्ति यत्रत्यविहारवीथ्यः।।

ट्यूबिंगननगरे अध्यापनक्रमे नैके तद्देशीयाः शिष्याः संस्कृतभाषायां तथा निष्णाताः संजाता यथा तेषां पद्यरचनायामप्यभवदभूतपूर्वा प्रवृत्तिः। एकेन शिष्येण अभिनन्दिता एते पद्मभूषणपुरस्कारप्राप्त्यनन्तरं पद्यात्मकेनाभिनन्दनपत्रेण एवम् –

ज्ञानपीठप्रदीपेन दीपितं भुवनं त्वया।
गुरो! साम्प्रतमास्से त्वं पद्मभूषणभूषितः।।१।।

पद्मेन भूषितोऽसि त्वं पद्मं चा भूषितं त्वया।
इति मे नास्ति सन्देहः पद्मं त्वं समभूषयः।।२।।

स्मृतिपथे दिवसा मम यान्ति ते सुखकरा गमितास्तव येऽन्तिके।
त्वमसि शास्त्रचणो निपुणेक्षणः सकलशिष्यगणप्रियतां गतः।।३।।

विविधशास्त्रचयं समबोधयोऽनतिबुधं निजशिष्यचयं मुदा।
अपि दुरूहतमं विशदं गुरो! श्रमगतो विषयं त्वमचीकरः।।४।।

स्मितमुखालपनेन सदा जनान् परिचयं न गतानपि मोहयन्।
प्रकटयन् निजसात्त्विकवृत्तितां त्वमभवो भुवि सत्त्वभृतां वरः।।५।।

स्मरामस्ते गुणान्नित्यं तव शिष्या वयं समे।
चर्चयामो मुदा तांश्च परस्परमुपागताः।।६।।

तव शिष्या इति वयं धन्यतां कलयामहे।
भाग्यादेव हि लभ्यन्ते त्वादृशा गुरवो भुवि।।७।।

भारते भारतोऽसि त्वं वयं शर्मण्यवासिनः।
तव शर्म सदा देवं प्रभुं सम्प्रार्थयामहे।।८।।

सदा स्वस्थस्सदा तुष्टस्सदा पुष्टश्च कोविद!
सुखेन सकुटुम्बस्त्वं शतं जीव समा गुरो!।।९।।

इतोऽपि भूयसो लब्ध्वा सम्मानाँल्लोकहर्षदान्।
यशो वितन्वँल्लोकेषु जीवितं व्यतियापय।।१०।।

ट्यूबिंगननगरात् प्रत्यावृत्ता एते विश्वविद्यालयानुदानायोगेन राष्ट्रियव्याख्यातृपदे चिता:। तदनन्तरमेतेषां नियुक्ति: श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य कुलपतिपदे १९८१ वर्षस्य जुलाईमासस्य सप्तमे दिवसे संजाता। सम्पूर्णस्यापि विश्वविद्यालयस्य स्थापनाया: सम्पूर्णोप्युपक्रम: एतेषां नेतृत्वे समपद्यत। नासीत् विश्वविद्यालये भूमिर्भूमिखण्डो वा। नवीनोऽसौ विश्वविद्यालय: शास्त्रिमहाभागानां प्राशासनिकेनोद्योगेन भूमिखण्डमलभत, भवननिर्माणोपक्रमश्च तत्र प्रावर्तत। १९७७ वर्षे पेरिसनगरे समायोजितस्य तृतीयविश्वसंस्कृतसम्मेलनस्यावसरे एतै: हालैण्ड, बैल्जियमादीनां योरोपदेशानां शैक्षणिकी यात्रा सम्पादिता। तत्रस्थै: अनेकै: संस्कृतविद्भि: सह एतेषां सम्पर्क: सञ्जात: यात्राक्रमेऽस्मिन्। एतेषु एगरमाण्ट महोदया: हिटलरस्य शासनकाले वर्षत्रयं कारागारे निरुद्धा यातनाततिभि: सम्पीडिता आसन्। असौ कारागारे अवरुद्धोऽपि श्वसिति इति स्वानुरागिणामवगमयितुमसौ कारागारस्य भित्तिकासु तत्रस्थेभ्योऽपरिचितायां संस्कृतभाषायां प्रतिदिनं किमप्यलिखत्। कर्णाकर्णिकया समाचार एष तत्परिजनै: सम्प्राप्य सन्तोषोऽनुभूत: यज्जीवति तेषां प्रियसुहृन्निरुद्धोऽपि कारागारे क्रूरशासकै:। एकदा तेन कारागारे प्राप्तमेकं पत्रं यत्र मेघदूतस्य पद्यमेवमुत्कीर्णमासीत् अभिप्रायविशेषस्य सम्प्रेषणाय तन्मित्रेण–

**शापान्तस्ते भुजगशयनादुत्थिते शार्ङ्गपाणौ**
**शेषान् मासान् गमय चतुरो लोचने मीलयित्वा।**
**पश्चादावां विरहगुणितं तं तमात्माभिलाषं**
**निर्वेक्ष्याव: परिणतशरच्चन्द्रिकासु क्षपासु।।**

अत्र यत् परिवर्तनं संदृश्यते तत्र ध्वन्यर्थेन संकेतितोऽस्ति हिटलरशासनस्य पतनकाल: हिटलरशासनस्य सैन्यबलस्य क्रमेण पराजयोन्मुखीभवनञ्च।

बैल्जियमदेशस्य ल्यूवननगरे स्थिते कैथोलिकविश्वविद्यालये स्वकीयाध्यापनप्रसङ्ग: ग्रन्थेऽस्मिन् उपवर्ण्यते शास्त्रिपादै:। १९८४ वर्षे बैल्जियमदेशादेते दिल्लीं सम्प्राप्ता:। बैल्जियमविश्वविद्यालये कालिदासस्य काव्यमध्यापयतामेतेषां मनसि अनेके पाठभेदा: प्रस्फुरिता: पाठौचित्यनिर्धारणक्रमे। एतेषां विचार: ग्रन्थेऽस्मिन्नाचार्यै: प्रस्तूयते विस्तरेण।

१९८७ वर्षे एतेषां पितृपादा: अभिनवपाणिनय: शिवसायुज्यं गता:। महाराजस्य रघोर्यशोविषये यदुक्तं महाकविना कालिदासेन तच्चरितार्थतां लभते एतेषां पितृचरणानां यश:कायविषये –

**आरूढमद्रीनुदधीन् वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम्।**
**ऊर्ध्वं गतं यस्य न चानुबन्धि यश: परिच्छेत्तुमियत्तयाऽलम्।।**

यदा शास्त्रिचरणा: कुरुक्षेत्रे आसन् तदा एतेषां पितृचरणैर्यदुपदिष्टं पत्रमुखेन तदत्र प्रस्तूयते–

"इदमेव तु विवक्षे – स्वे कर्मणि सर्वात्मना व्याप्रियस्व, आर्जवेन च गुरुषु वर्तस्व, विनेयेषु च हार्देनातिरिक्तेन प्रवर्तस्व। नान्यच्चिन्तय, न च रुष्य, न वाऽपरागमर्हति जने समीरय"।

वाग्व्यवहारादर्शादीनां व्याकरणप्रयोगव्युत्पादकानाम् अप्रतिमवैदुष्येण विद्योतितान्त:करणानामनेकेषां

ग्रन्थरत्नानां प्रवर्तकानाम् आचार्यचारुदेवशास्त्रिणां संस्मरणमुपनिबध्नन्ति आत्मकथेतिवृत्तात्मकतया शास्त्रिचरणाः अत्र विस्तरेण। शोकाक्रान्तचेतोभिरेतैः अत्मवेदना निगद्यते एवम् –

**यावज्जीवं समाराध्य शब्दब्रह्म विशेषतः।**
**तातपादा अन्तकाले तत्रैव विलयं गताः।।**

**अनाथं संस्कृतजगदनाथा च सरस्वती।**
**अनाथं चापि वैदुष्यमनाथा प्रतिभाऽपि च।।**

**तादृशेऽथ महाभानावस्ताचलमुपेयुषि।**
**तामिस्रमिव भात्येतज्जगत्कृत्स्नं चराचरम्।।**

१९८१ वर्षे काशीहिन्दूविश्वविद्यालये समायोजिते पञ्चमविश्वसंस्कृतसम्मेलने डी.लिट्. इति मानदोपाधिप्राप्त्यनन्तरं मया कृतमासीद् पितृचरणानामेतेषां दर्शनम्। स्नातकक्षायामधीयानोऽसौ बटुः सौभाग्यादुपलब्धेन तेषाम् आशीर्वादेन आत्मानमद्यापि कृतकत्यं मन्यते। श्वेतोष्णीषाणां चारुदेवशास्त्रिणां सौम्याकृतिः सम्प्रत्यपि मम मनसि विराजते। संस्कृतसेवायै प्रेरितोऽयं जनः सम्प्रत्यपि स्मरति तेषां पीयूषवर्षिणीं वाणीम्। तत्प्रसादप्रभावेण मन्ये अद्य मया अवसरोऽयं लब्धः तच्चरितप्रकाशकस्य आत्मकथावृत्तस्योपरि लेखनस्य।

१९८४ वर्षे शास्त्रिवर्याः अमेरिकादेशस्य पेन्सिल्वेनियानगरे समायोजिते विश्वसंस्कृतसम्मेलने समुपस्थिता आसन्। प्राक्तनसंस्कृतवाङ्मयादाधुनिकसंस्कृतवाङ्मयस्य भेदविषयिणी या चर्चा तत्र प्रावर्तत अन्तिमे सत्रे तत्र शास्त्रिमहाभागा आसन् अध्यक्षाः। अन्यैः समाधानम् अपश्यद्भिरेभिर्यत् समाधानं प्रस्तुतं तदरोचत सर्वेभ्यो तत्रस्थेभ्यो विद्वद्वरेण्येभ्यः।

ग्रन्थस्यास्य पर्यवसानं स्वयमेवोद्गिरन्ति शास्त्रिवर्याः स्वस्य जीवनेतिवृत्तस्य विषये –

"मया कुत्र कुत्र न गतं, कुत्र कुत्र वा न भाषितं, कुत्र कुत्र न वाऽध्यापितं, कैस्कैर्न वा संगतं, किं किं न वा दृष्टं, कैस्कैर्न वाऽऽलपितम्। विश्वयात्र्यहम्। नाना देशा मया गमिकर्मीकृताः। अद्य वर्षीयानहं संवृत्तः। बहु दृष्टं मया, बहु चानुभूतम्। तस्य सर्वस्य स्मृतितितिर्मे मनोऽनेकश उद्वेल्लयति। दूरङ्गमं जविष्ठं ज्योतिषां ज्योतिरिति श्रुत्या कीर्तितं तन्मां स्मृतिमाध्यमेन दूरस्थांस्तान् देशान् पुनरपि प्रापयति, पूर्वदृष्टैर्विद्वद्भिः संगमयति, तैः सम्भाषयति, तत्स्नेहेन मां स्नपयति, मदीयां रिक्ततामपनीय पूर्णतां मय्यादधाति। तदा हठान्निःसरति मे मुखाच्छ्रुतिवचः -

**पूर्णमिदं पूर्णमदः पूर्णात् पूर्णमुदच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।**

अथोपसंहारवचः -

**पूर्णोऽहं, पूर्णकामोऽहं पूर्णो मे हृदि संस्थितः।**
**कृपया तस्य पूर्णस्य ग्रन्थोऽयं पूर्णतां गतः।।**

ग्रन्थेऽस्मिन् शास्त्रिवर्याणां जीवनस्य अध्ययनकालः, अध्यापनकालः विदेशयात्रावृत्तान्ताश्च विस्तरेणोपनिबद्धाः सन्ति। आत्मेतिवृत्तात्मकोऽयं ग्रन्थः विशिष्टक्रियापदप्रयोगैः प्रतिपदमलङ्कृतः संस्कृताध्येतृणां कृते अत्यन्तं व्युत्पादकोऽस्ति संस्कृतभाषायाः सम्यग्ज्ञानाय। ग्रन्थेऽस्मिन् अनेके अभिनवाः प्रयोगा उपलभ्यन्ते स्वभावप्रकाशनसमर्थाः। व्याकरणशास्त्रस्य सूत्राणि समुल्लिख्य समाधानं विधीयते सर्वत्र दत्तैः पादटिप्पणैः शास्त्रिमहाभागैः व्युत्पादनाय संस्कृज्ज्ञानाम्। तद्यथा-

**तवाहं बहुधा स्मरामि** इत्यत्र अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेन षष्ठी; **त्वां नैकदा प्रत्याशृण्वम्** इत्यत्र प्रत्याङ्भ्यां श्रुवः (१.३.५९) इत्यनेन सूत्रेण परस्मैपदम् ; **केवलं विषयज्ञानप्रति** इत्यत्र सुप् प्रतिना मात्रार्थे (२.१.९) इत्यनेन मात्रार्थेऽव्ययीभावः ; **गङ्गायां वासस्तस्य सुप्रसिद्ध** इत्यत्र गङ्गायां घोष इतिवत्प्रयोगः; **मे मनः उदन्यितस्योदकमिव** इत्यत्र अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु (७.४.३४) इत्यनेन निपातनात्साधु। उदन्यितस्य पिपासितस्येत्यर्थः ; **लोका अन्योन्यं व्यतिजघ्नुः** इत्यत्र न गतिहिंसार्थेभ्य (१.३.१५) इत्यनेन सूत्रेण कर्मव्यतिहाररूपेऽर्थेऽपि आत्मनेपदनिषेधान्नात्मनेपदम् ; **गृहमात्मन्यधि कृतम्** इत्यत्र अधिरीश्वरे (१.४.९७) इत्यनेन सूत्रेण सप्तमी ; **कदाचिद्दिवापि भूयसेऽन्धतमसाय कल्पते** इत्यत्र प्रयोगे अवसमन्धेभ्यस्तमसः (५.४.७९) इत्यनेन समासान्तेऽचि रूपम् ; **तच्छ्रुत्वोमिति चोक्त्वा** इत्यत्र प्रयोगे ओमाङोश्च (६.१.९५) सूत्रेण पररूपम् ; **तानविनयार्थं क्षमां भिक्षमाणोऽहं** इत्यत्र अकथितं च (२.४.५१) सूत्रप्रयोगेण द्विकर्मकतायां द्वितीया; **मनः प्रमोदभरणेऽपिपः** इत्यत्र पृ पालनपूरणयोरित्यस्य लङि प्रथमपुरुषैकवचने रूपम् ; **कदाचिदात्मम्भरिः सा स्यादेव न तु परमुखापेक्षिणी** इत्यत्र फलेग्रहिरात्मम्भरिश्च (३.२.२६) इत्यनेन निपातनम्। आत्मानं बिभर्तीत्यर्थः ; **मशकाश्च यूकालिक्षं चापि यथेच्छमस्मद्रक्तं पपुः** इत्यत्र क्षुद्रजन्तवः (२.४.८) इत्यनेन समाहारद्वन्द्व एकवद्भावः स नपुंसकम् (२.४.१०) इत्यनेन च नपुंसकत्वम् ; **बहिः स्थिताय स्वपतये कसेवाख्याय यदा तद्धर्मपत्नी** इत्यत्र प्रयोगे पतिः समास एव (१.४.८) इत्यनेन घिसञ्ज्ञायां घेर्ङिति (७.३.१७९) इत्यनेन गुणे रूपम् ; **धर्मकालेजप्राचार्य डा.आर.एन.रायमहाभागनिकाय्यैकदेशोऽवक्रीतः** इत्यत्र गृहार्थकोऽयं शब्दः। तथा ह्यमरः - गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः (२.२.५); **सन्देहपदेषु च वस्तुषु तद्वचांस्येवातिष्ठत** इत्यत्र प्रयोगे प्रकाशनस्थेयाख्ययोश्च (१.३.२३) इत्यनेन स्थेयाख्यायां निर्णेतृत्वेनाश्रयण आत्मनेपदम्, संशय्य कर्णादिषु तिष्ठते य इत्यादिवत्।

इत्थं प्रतिविशिष्टप्रयोगम् आचार्यवर्यैः तत्सूत्रोल्लेखपूर्वकं ससन्दर्भं समर्थ्यते सम्पूर्णेऽपि ग्रन्थे। व्याकरणशास्त्रस्य विशिष्टप्रयोगाणां प्रशिक्षकोऽसौ ग्रन्थः।

गद्यं कवीनां निकषं वदन्तीति प्राचामुक्तिः। अस्मिन्नात्मकथारूपे गद्यग्रन्थेऽपि तत्तद्वर्णनेषु समुन्मिषति काव्यरसः। निदर्शनार्थं सन्दर्भद्वयमधस्तादुद्ध्रियते–

(1) तत्रारम्भेऽस्त्यभ्रचुम्बि प्रेषणीभवनम् अन्ते च लाट साहब का महल इति ख्यातो राज्यपालावासो यं समयाऽति विशालं नानाद्रुमलतासनाथितं शिमलापहाड़ीत्याख्यं

सततप्रवहदनेकनिर्झरनिनादनिर्ह्रादितं गजानामङ्गे रचिता भक्तिरिव नानाकृतिलघूद्यानततिसमलङ्कृतं लारेंसोद्यानं यन्नेत्रद्वयासेचनकतामावहति। (पृष्ठम् 20)

(2) अस्ति बेल्जियमदेशे नानापादपराजिविराजितं शस्यश्यामलभूमिमण्डनायमानं प्रसादनं चेतसः सुखाकरं देहयष्टे रसायनं नयनयोः 'एर्परहाइद' इति स्थलम्। तत्र सन्ति व्यायामस्थली, सततप्रवहदमलजलप्रस्रवणानि प्रस्रवणानि, उष्णजलबुद्बुदस्नानार्थं विशालं कुण्डम्। (पृष्ठम् 263)

परोक्षभूतात्मकेतिवृत्ते परोक्षभूतक्रियापदानां विलक्षणप्रयोगततिभिः व्याप्तोऽस्ति ग्रन्थोऽयं प्रतिपदम्। भूतपूर्वेतिवृत्तविषये यादृशा विचारा, यादृशः घटनाक्रमः तत्सम्बन्धिनश्च यादृशा भावा एतेषां मनसि जायन्ते तेषां समेषां याथातथ्येन संस्कृतमाश्रित्य विशिष्टप्रयोगनिष्णाता सम्यगुपस्थापनं कुर्वन्त्येते सर्वत्र। संस्कृतभाषायां गद्यरचनाप्रकारस्य अपूर्वोऽसौ ग्रन्थः संस्कृते राराज्यते इति समेषामेवास्माकं कृते महतः प्रमोदस्य विषयः।

• • •

# 31

## संस्कृते प्रथममवतरणम् आत्मकथायाः

## भवितव्यानां द्वाराणि भवन्ति सर्वत्र ( द्वितीयो भागः )

## समीक्षात्मकमध्ययनम्

देवर्षिकलानाथशास्त्री

संस्कृते स्ववृत्तकथनपरं नाऽस्ति विपुलं साहित्यम्। आत्मकथानाम्ना गद्यसाहित्यस्यैका विधा विभिन्नासु भाषासु सुपरिचिताऽस्ति, "आटोबायोग्राफीति" तस्या अभिधानमाङ्गल्याम्। चरितवर्णन-समीक्षात्मकमध्ययनपरं गद्यसाहित्यं तु विद्यत एव संस्कृते यथा बाणभट्टादीनां हर्षचरितादयः, किन्तु तादृश्यात्मकथा संस्कृते न सुविदिता यथाऽन्यासु भाषासु हरिवंशरायबच्चनसदृशानां शृङ्खलाबद्धा आत्मकथा ('क्या भूलूं क्या याद करूं' शीर्षकं प्रथमखण्डमारभ्य' नीड का निर्माण फिर' प्रभृतयश्चत्वारः खण्डाः) यथा सुप्रथितास्तथा न कस्यापि महापुरुषस्याऽऽत्मकथा संस्कृते सुविदिता। एतस्या अतिरिक्तेरद्भुतां समर्हणीयां च पूर्तिं विद्वन्मूर्धन्यानां पद्मभूषण प्रो० सत्यव्रतशास्त्रिणां भागद्वये निबद्धया सुतरामभिनन्दनीययाऽऽत्मकथया सञ्जायमानां वीक्ष्य को नाम संस्कृतज्ञो नाऽनुभवेद्धर्षातिरेकम्? आत्मकथाया अस्या अभिधानमस्ति "भवितव्यानां द्वाराणि भवन्ति सर्वत्र।" प्रौढे, प्राञ्जले, सुललिते च संस्कृतगद्ये हृदयावर्जिकया शैल्या आत्मकथायामस्यां यथा तैः स्वकीयं जीवनवृत्तं वर्णितं तेन पाठकानां बहुमुख उपकारः सिध्येदिति स्पष्टीभवति। विश्वजनीनानां संस्कृत-सरस्वती- सेवा-सम्बद्धानामनुभवानां वृत्तमनेन परिचाय्येत। देशे विदेशेषु च कथं शास्त्रिवर्यैः संस्कृतवाङ्मयस्य महिमा प्रासारि, कीदृशश्चास्ति संस्कृतस्य विदेशेषु परिवेश इति तु परिज्ञायेतैव पठकैः (शास्त्रिवर्यैः, अध्येतारः पठकशब्देन अध्यापयितारश्च पाठकशब्देन सूच्येरन्निति परोक्षविधया स्वलेखनेन स्वाभिमतं सूचितं प्रतीयते ग्रन्थेषु) सहैव संस्कृते नूतनानां शब्दानां, पाणिन्यागम-परिगृहीतानामल्पज्ञातानां प्रयोगाणां शैल्याश्चाप्यवगमस्तैः क्रियेत, बह्व्यो नूतना उद्भावना अप्यवबुध्येरन्, साम्प्रतिके परिवेशे किं कर्त्तव्यं संस्कृतसेवकानामित्यतिप्रासङ्गिकतया परिलक्ष्येत ग्रन्थेऽस्मिन्।

"भवितव्यानां द्वाराणि भवन्ति सर्वत्र" शीर्षकस्यात्मवृत्तस्य प्रथमो भागः ईशवीये 2015 तमे वर्षे प्राकाशि, द्वितीयो भागस्तु सद्य एव (ई० 2017 वर्षस्यारम्भे ) प्रकाशित इति सुमहान् प्रमोदः। ज्ञानपीठपुरस्कारेण, राष्ट्रपति-पुरस्कारेण, साहित्यअकादमी पुरस्कारेण, पद्मभूषणसम्मानेन च सभाजितैः, देशे विदेशेषु च संस्कृताध्यापन-प्रसङ्गे समादृतानि पदान्यधितस्थिवद्भिः, भारतशासनेन स्थापितस्य द्वितीय- संस्कृताऽऽयोगस्याध्यक्षपदमलङ्कृतवद्भिः 86 वर्षवयस्कैः प्रो० सत्यव्रतशास्त्रिभिः दैनन्दिनीरूपेण (डायरी शैल्या) "दिने दिने याति मदीयजीवितम्" शीर्षकवहं

यत् स्वकीयानुभववृत्तं पूर्वप्रकाशिते ग्रन्थे वर्णितं तदपि दैनन्दिनी (डायरी) विधायाः संस्कृते नूतनमवतरणं कथयितुं शक्यते। एवंविधेषु प्रणयनेषु शास्त्रिवर्याणां संस्कृतलेखनशैली बहुत्र व्याकरणस्य पाणिन्युपदिष्टानां किन्तु साम्प्रतमल्पज्ञातानां रुचिराणां प्रयोगाणां दिग्दर्शनं कारयति, एवंविधेषु स्थलेषु पादटिप्पणीरूपेण तैस्तस्य परिचयोऽपि प्रदत्तः सुतरामुपकारी स्याज्जिज्ञासूनाम्। यथा "संगच्छते" इत्यस्य लुङि रूपं "समगत" इत्यपि भवेत् "समगंस्त" इत्यपीति प्रसङ्गवशात् सूचयन् लेखकः पादटिप्पण्यां कथयति (पृ. 243)। पाणिनीयशास्त्रज्ञता सेयं लेखके वंशानुगताऽस्ति। सुप्रथितो विद्वन्मणिर्वैयाकरणाग्रणीः पं० चारुदेवशास्त्री (लाहौर) सत्यव्रत- शास्त्रिणः पिताऽऽसीद्, यो भाषाविदामग्रणीरभूत्। अस्यामात्मकथायामपि प्रसङ्गवशात् पितृचरणैः सह कृतानां कार्याणां स्मरणं कृतं लेखकेन। तयोः ग्रन्थानां प्रकाशनविषये कैश्चन प्रकाशकैः कथमाचरितम् इत्यद्यापि स्मृतमत्र, पुत्रस्य शरच्चन्द्रस्योपनयनसंस्कारादेर्वृत्तमपि, यत्र पूज्याश्चारुदेवशास्त्रिणोऽभूवन् साक्षिणः।

अत्रैव लेखकस्य कतिपयेषां ग्रन्थानामवतरणस्य वृत्तान्यपि सूचितानि, निबन्धादीनां संकलनपुस्तकादीनां प्रकाशनस्याऽपि। लेखकस्य सर्वप्रथमं प्रकाशनमासीद् द्वादशवर्षीयेण तेन 15 पद्येषु लिखितं षड्ऋतुवर्णनं यज्जयपुरीये संस्कृतमासिके "संस्कृतरत्नाकरे" तत्सम्पादकेन भट्टश्रीमथुरानाथशास्त्रिणा सन् 1942 वर्षे प्रकाशितमभूत्। तस्य चित्र-प्रतिलिपिरत्र मुद्रिता। तदनु, "बृहत्तरं भारतम्" "श्रीबोधिसत्त्वचरितम्" प्रभृतीनि सर्जनात्मकसाहित्यप्रकाशनानि, वैदिकव्याकरण-श्रीरामचरिताब्धिरत्न-प्रभृतीनामनुवादाः, मानवमूल्यान्युपलक्ष्य, भारतविद्यामुपलक्ष्य, योरुपीय-विदुषां संस्कृतरचना उपलक्ष्य, थाईदेशीयान् संस्कृताभिलेखानुपलक्ष्य वा लिखितानां विमर्शलेखानां प्रकाशनानि च स्मृतानि।

थाइलैंड-देशे राजगुरुत्वेन शास्त्रिवर्यैर्यत् कार्यं कृतं, तत्रोपलभ्यमानानां भारतीय-संस्कृत्यवशेषाणां यदनुसन्धानं कृतं तद् बहुमूल्यमस्त्येव। तस्य स्मृतीनामनन्तरं सम्प्रति प्रणीयमानानां ग्रन्थानां सूचना, ततः केन्द्रीयसाहित्य अकादम्या यत् सम्मानद्वयमुपायनी-कृतं (1968 ई० वर्षे संस्कृतपुरस्कारः, 2013 ई० वर्षे च महत्तरसदस्यता फेलोशिप) तत्सूचनाः, चीन-देशयात्रा-वृत्तम् (2011 ई०), सर्वमिदं पाठकानामुपकाराय स्यादेव।

ग्रन्थेऽपि प्रसङ्गाः पाठकानामुपकारकाः स्युरिति तेभ्यः कलेवरविस्तरभिया केवलं प्रसङ्गद्वयमेवाधस्तादुद्धरामि-

(1) "चाणक्यनीतेरनुवादविषयेऽस्ति विचित्रो रोचकश्च प्रसङ्ग एकः। तमप्यत्रोपस्थापयितुमिच्छामि।

ममैष स्वभावो यदेतादृशं किमपि पद्यं वा तादृशो गद्यांशो वा यद् वा यो वा मह्यं रोचते तद्वा तं वा कुत्रापि पत्रखण्डे न्यस्ताक्षरं कृत्वा तं पत्रखण्डं कुत्रापि सञ्चिकायां- फ़ाइल इत्याङ्ग्ल्यां-निदधामि, कार्यकाले समुत्पन्ने तदुपलम्भः स्यादिति। तादृशस्यैकस्य पद्यस्यान्वेषणाय नाना सञ्चिका मयाऽवलोकिता नोपलब्धं च तत्पद्यम्[1], परमेकः पत्रपूगो मद्दृष्टिमापन्नो यत्र चाणक्यनीतिग्रन्थो मया हिन्द्याङ्ग्लभाषाभ्यामासीदनूदितः। अनुवादस्तत्राक्रमेणासीत्। पूर्वं प्रथमपद्यं तदनन्तरं तृतीयपद्यं

1. तस्य पद्यस्याशयः- यथाऽहं स्मरामि- इत्थमासीत् - नैकेषु गुरुषु समुपस्थितेषु प्रथममभ्यर्च्चा (=सत्कारः) कस्य गुरोः कर्तव्या। तत्रायमेव निर्णयो यत् सा तस्य गुरोर्भवतु येन जनोऽङ्गुलिग्राहमक्षराभ्यासं कारितः।

तदनन्तरं पञ्चमं पद्यमित्येवम्। कदा वा मया स ग्रन्थोऽनूदितः, किमर्थं वाऽनूदितः, यद्यनूदितस्तर्हि किमर्थं क्रमस्तत्र नाश्रित इति सर्वं मे स्मृतिपथाद्विलुप्तमासीत्। मातृकारूपेण सञ्चिकायां स्थितः सोऽनुवादोऽतर्कितोपनतो धनराशिरिव मां भृशं प्रामोदयद् व्यस्मापयच्च। तदेदं प्रादुरभून्मे मनसि कुतो नासम्पूर्णानुवादमिमं ग्रन्थमवशिष्टांशानुवादसनाथितं विधाय विस्तृतां हिन्द्याङ्गलभूमिकां च तत्र संयोज्य तं प्रकाशयेयमिति। तामेव विचारसरणिमनुसृत्य 2013 वर्षे जूनमासप्रथमदिवसे मया लेखनी हस्ते कृता मध्ये मध्येऽननूदितानि पद्यान्यनूदितानि भूमिका च हिन्द्याङ्गलभाषाद्वयेन विरचिता। कार्यमिदं जूनमासान्तिमदिवसे परिसमापय्य लेखनी मया त्यक्ता। अयमितिहासोऽस्याः कृतेरनुवादस्य। यदि पद्यान्वेषणप्रसङ्गेन नाहं सञ्चिका अन्वेषिष्यं तर्हि ग्रन्थोऽयं मम सर्वथा मातृकारूपेण सञ्चिकायां स्थितो नैव कदाचिदपि प्राकाश्यमयास्यत्। जीवने नैकशोऽद्भुतमेव घटते। तदेवैतद्ग्रन्थविषयेऽप्यभूत्।

कीदृशोऽत्रत्यपद्यानुवाद इति विदुषां मनोविनोदाय पद्यद्वयमाध्यमेनाधः प्रस्तौमि-

**कस्य दोषः कुले नास्ति व्याधिना को न पीडितः।**
**व्यसनं केन न प्राप्तं कस्य सौख्यं निरन्तरम्।।1।।**

ऐसा कौन है जिसके कुल में खोट न हो, ऐसा कौन है जो रोग से पीड़ित न हुआ हो, ऐसा कौन है जिस पर विपत्ति न आई हो, ऐसा कौन है जिसे निरन्तर सुख ही सुख मिलता रहा हो।

Which family is there that does not have its loophol/s ? Who is there who has not suffered ailment ? Who is there who has not met with an adversity ? Who has had happiness on end ?

**हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो**
**दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः।**
**वज्रेणापि हताः पतन्ति गिरयः कि वज्रमात्रो गिरिः**
**तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः।।3।।**

हाथी का शरीर कितना लम्बा चौड़ा है पर वह भी अङ्कुश से बस में आ जाता है, क्या अङ्कुश हाथी के आकार का है? दिया जलने पर अन्धकार दूर हो जाता है, क्या अन्धकार दिये के आकार भर का है? गाज जब उन पर गिरती है तो पहाड़ ढह जाते हैं, क्या पहाड़ गाज भर के आकार के हैं? जिसमें तेज है वही बलवान् है। आकार-प्रकार के बड़े होने से क्या होता है?

An elephant has a big body, even that is controlled by goad. Is the goad of the size of an elephant? With the light of the lamp disappears darkness. Is darkness of the size of lamp? When thunderbolt strikes, fall flat the mountains. Is thunderbolt of the size of mountain? One who has strength is mighty. How does massivity matter?"

(2) "मया वैदिकव्याकरणानुवादकाले यथोचितपदप्रयोगविषये बहु चिन्तितम्। गच्छंस्तिष्ठन्नश्नन् सदैव तच्चिन्तापरोऽहमभूवम्। स्थालीपुलाकन्यायेनास्यैकमुदाहरणमत्र प्रस्तौमि।

मैक्डानलेन प्रकृय, प्रहृय इत्यत्र तकारप्रवेशमालक्ष्योक्तम्- Phonetic *t* is added to *ya*-Phonetic इति पदं कथमनुवदितव्यमित्यासीन्मम पुरतः प्रश्नः। सामान्यतः ध्वन्यात्मकशब्दः इत्येवंरूपेणेदमनूद्यते। परमत्र ध्वन्यात्मकस्तकारो यकारेऽनुप्रयुज्यत इत्युक्ते न किमपि स्पष्टं भवति। पाणिनीयपद्धतौ ह्रस्वस्य पिति कृति तुक् (6.1.71) इत्यनेन तुगागमे प्रकृत्य-प्रहृत्येत्यादिरूपाणि सिध्यन्ति। परं मैक्डानलस्यात्रान्यविधं चिन्तनम्। भवतु नामात्र तकारागमः (तुगागमः), परं किमर्थं स इति स प्रतिपिपादयिषति। एकस्मिन् दिनेऽकस्मादेव मे मनस्यागतं यद् भगवता पतञ्जलिनैतद्विषये यन्महाभाष्य उक्तं मुखसुखार्थस्तकार इति तदेव मैक्डानलस्यापि मनस्यासीत्। Phonetic इत्यनेन तस्येदमेव तात्पर्यम्। मुखसुखमुच्चारणसौकर्यं नाम। तत्र लोकस्य स्वाभाविकी प्रवृत्तिः। भाषायां लोपागमवर्णविकारास्तत्प्रभवा एव। प्रकृत्य, प्रहृत्य इत्यत्र यथोच्चारणसौकर्यं तथा प्रकृय, प्रहृय इत्यत्र न। अत एव कुतोऽपि तकार आगच्छति-आगच्छतीत्यागमः- आत्मानं च यकारपुरतः स्थापयति। एवं शब्दोच्चारणे मुखं सुखमनुभवति।

हिन्द्यां वानरशब्दो बन्दररूपेणोच्चार्यते। तत्र दकारः (सोऽप्यागम एव) मुखसुखार्थमेव। एवमन्यत्रापि।

तुमुन्नन्ताः शब्दा आङ्गलभाषायां Infinitive इति सञ्ज्ञयाऽऽख्यायन्ते। यदि लोके तुमुन्नेव, तर्हि वेदे तत्स्थानेऽन्येऽपि प्रत्ययाः। पाणिनिना ते सर्वेऽपि तुमर्थे से असेन् अध्यै अध्यैन् शध्यै शध्यैन् तवै तवेङ् तवेनः (3.4.9) इति सूत्रे संकलिताः। से असेन् इत्यादीनां तुमर्थसञ्ज्ञा भगवतैव सूचिता। ते नाम तुमर्थाः प्रत्ययाः। हिन्द्यां तेऽपि तुमर्थ इति सञ्ज्ञया शक्या आसन्नभिधातुम्। परं मैक्डानलः अध्यै इत्यादिष्वर्थदृष्ट्या तुमुनं रूपदृष्ट्या च चतुर्थीविभक्तिं पश्यति। एवमेव नेषणि, गृणीषणीत्यादिषु मातरि पितरीत्यादिवत् सप्तमीम्। अतएव तत्कृते स Dative Infinitive इत्यादिशब्दान् प्रयुङ्क्ते। तत्स्थाने हिन्द्यां चतुर्थीप्रतिरूपक, Locative इत्यस्य स्थाने सप्तमीप्रतिरूपकतुमर्थप्रत्यय इति मया प्रायोजि।

स्थाने स्थाने व्याकरणसम्प्रदाये छन्दःसम्प्रदाये च प्रयुक्ता अतएवास्माकं सुपरिचिताः शब्दा मयाऽनुवादे प्रयुक्ताः। यथा Anaphoric इत्यस्य स्थाने अन्वादेश इति, Positionally long इत्यस्य स्थाने संयोगे गुरु इति। मैक्डानलेन Sonant nasal इति यः शब्दः प्रयुक्तः तत्र तस्य कोऽभिप्राय इति विषयेऽहं बह्वचिन्तयम्। ध्वनितमनुनासिकमित्यनेन न किमपि सिध्यति। डा. सिद्धेश्वरवर्ममहाभागैः सहात्र विषये कृतया चर्चया मया तदाशयोऽवबुद्धः। उपदेशेऽजनुनासिक इत् (1.3.2) इति सूत्रेणाचार्यपाणिनिनाऽनुनासिकस्य इत्सञ्ज्ञा विहिता यद्वशात्तस्याचः तस्य लोप (1.3.9) इति लोपो भवति। उपदेश आद्योच्चारणम्। धातुपाठादिषु यो यो धातुर्यद्वा प्रातिपदिकं यो यो वाऽऽगमोऽनुनासिकाजन्तस्तस्य तस्यानुनासिकाच इत्सञ्ज्ञा भवति। उदाहरणरूपेण काशिकायाम् एध स्पर्ध इति धातू निर्दिष्टौ। एतेन ज्ञायते यत् पुराकाले केचन धात्वादयोऽनुनासिकाजन्ता अप्यासंस्तथा चोच्चार्यन्ते स्म। कालेन तदीयोऽनुनासिकोऽच्यन्तर्भूतः। ते धात्वादयश्चाननुनासिका संवृत्ताः। सम्प्रति तेऽननुनासिकाः परं पूर्वं सानुनासिका आसन्निति सानुनासिकत्वं तेषामभ्युपेयमेव। अत एव प्रतिज्ञानुनासिक्याः पाणिनीया इति पाणिनीयव्याकरणसम्प्रदाये सुप्रथितोक्तिः। तादृशोऽनुनासिको यस्य कालेन स्वरे विलीनता भवेदिति स्वरोन्मुख अनुनासिक इत्यनुवादः सर्वथोचितो हृद्यश्च।

दशलकारेषु लेट्लकारश्छन्दोमात्रगोचर इति प्रकाशम्। स मैक्डानलेन शब्दरूपदृष्ट्याऽर्थदृष्ट्या च Subjunctive&Injunctive रूपेण द्विधा विभक्तः। प्रथमः लेट् (1) इति रूपेण द्वितीयश्च लेट् (2) इति रूपेण मया निर्दिष्टः।

मैक्डानलेन द्वादशधा विभिन्नाशयतां द्योतयितुमक्षराणि टंकितानि। मयाऽपि तथैव कृतम्। अक्षरयोजकावबोधाय विभिन्नवर्णमसीका लेखन्यस्तं तमंशं येन येन प्रकारेण स टङ्कयितव्य इति सूचयितुं प्रयुक्ताः। सोऽभूदनुवादातिरिक्तो मयि कार्यभारः। सोऽपि मया सम्यक् कार्यसिद्धिपरेणानुद्वेगं सोढः।"

एवंविधानामात्मवृत्तानां प्राञ्जल-प्रौढ-संस्कृतनिबद्धं वर्णनमात्मकथाविधां संस्कृते स्थापयतीति भागद्वये प्रकाशितोऽयं ग्रन्थो विशिष्योल्लेखमर्हति। अस्मिन् प्रसङ्गवशाच्चित्ताह्लादकारिण्यः कतिचिद् घटना वर्णिताः सन्ति याः संस्कृताध्येतॄणां ज्ञानमेधयेयुः। विद्वच्चर्चाप्रसङ्गेषु शास्त्रिवर्यैर्मेघदूतीयस्य पद्यांशस्य वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्येत्यस्य मध्ये समापततो "वल्मीकाग्र" पदस्यार्थो वस्तुतो नीलमेघादुद्गच्छतो धनुषः (इन्द्रधनुषः) सूचना-प्रदानेन सम्यगन्वेति, वल्मीकस्यार्थो 'नीलमेघ' इत्यपि भवति इत्यादि प्रसङ्गवशात् सूचितमस्ति। एकदा तैः "पश्यैतां पाण्डुपुत्राणामाचार्य! महतीं चमूम्" इति गीतायाः प्रारम्भे पठितस्य श्लोकार्धस्यैवमर्थो विवृतोऽभूत् हे पाण्डुपुत्राणामाचार्य! एनां महतीं चमूं पश्य!! एवंविधानि वृत्तानि मनः प्रसादकारीणि सिध्येयुरेव।

आत्मकथाया अयं द्वितीयो भागः समये समये घटितानां घटनानां स्मृतिचित्राणि 156 खण्डेषु (प्रघट्टकेषु) निबद्धानि संगृह्णाति। एषु खण्डेषु पार्यन्तिकाः 133 त आरभ्य 155 संख्यावधि 23 खण्डा द्वितीयसंस्कृताऽऽयोगसम्बद्धानां वृत्तानामङ्कनं कुर्वाणाः सुभृशमुपकुर्युः संस्कृतसेविन इत्यस्माकं विश्वासः। कथं 2014 ई० वर्षे आयोगोऽयं कार्यमारभत, पर्याप्तसुविधानामभावेऽपि कथं संस्कृतस्य संस्कृतशिक्षायाश्च स्थितिं पर्यवेक्ष्य तस्या वास्तविकमङ्कनं व्यधायि आयोगाध्यक्षेणेति प्रसङ्गेष्वेषु स्पष्टीभवति। अत्रैव प्रसङ्गतस्तदिदमपि परिगणितं शास्त्रिवर्यैर्यद् भारते बहवस्तादृशाः प्रशासन-सेवाया उच्चाधिकारिणोऽभूवन्, सम्प्रत्यपि सन्ति, ये संस्कृताध्येतारः संस्कृतविद्वांसश्च सन्ति। संस्कृतज्ञाः केवलं संस्कृताध्यापकत्वेनैव सम्मान्यां स्थितिं बिभ्रति, सेयं धारणा सुतरामतथ्या। अत्रैव प्रसङ्गवशादिदमप्युल्लिखितं तैर्यद् गणितशास्त्रे, चिकित्साशास्त्रे, खगोलविज्ञाने, दूरसंचारपद्धतिषु, बहुषु क्षेत्रेषु संस्कृतस्योपयोगिताऽद्यापि जागर्ति। आयोगस्यास्य प्रतिवेदने संस्कृतशिक्षायाः परिष्काराय बहवः परामर्शाः सन्ति, आगामिनि काले कथं संस्कृतसंवर्धनं राष्ट्रोपकारकं सेत्स्यतीत्यादयो विषया अपि विवृताः। आत्मकथाप्रसङ्गे सेयं स्मृतिपथगा सूचनासामग्री सुतरामुपयोगिनी सिध्येदित्यत्र नास्ति सन्देहः।

इत्थं संस्कृते आत्मकथाविधाया अवतारणां विदधानस्य ग्रन्थद्वयस्योत्तरार्धं प्रतिनिदधानोऽयं द्वितीयो भागः साहित्येतिहासे विशिष्टं स्थानं बिभृयादिति स्पष्टमनुभवेयुः पाठकाः। एतस्य पदार्पणोपलक्ष्ये शतशो वर्धापनवाचः समर्प्यन्ते विद्वद्वर्येभ्यः प्रो० सत्यव्रतशास्त्रिभ्यः।

# 32

# डॉ० सत्यव्रतशास्त्री द्वारा रचित पत्रकाव्यम् का समीक्षात्मक अध्ययन

*नीलम यादव*

---

आधुनिक संस्कृत सर्जना में पत्रलेखन को माध्यम बनाकर कवित्व की प्रस्तुति का प्रवर्तन बीसवीं शताब्दी में प्रारम्भ हुआ तथा इसी शताब्दी में इसने साहित्य में अपना महत्वपूर्ण स्थान बनाने में सफलता प्राप्त की।

आधुनिक सर्जना में पत्रलेखन को कलात्मक रूप में कम किन्तु साहित्यिक रूप में अधिक महत्व प्रदान किया गया है। यही कारण है कि पत्रलेखन विधा से सम्बन्धित साहित्य प्रकाशित भी हुआ है तथा उसमें समालोचन की अपेक्षा भी दृष्टिगोचर हुई है।

पत्रलेखन मानवीय विचाराभिव्यक्ति की एक ऐसी प्रवृत्ति है जिसमें अप्रत्यक्ष रूप में विचार विनिमय को प्रोत्साहन प्रदान किया जाता है। पत्रलेखन से अभिव्यक्त अपने उद्‌गारों को पढ़कर लेखक तो आत्मसंतुष्टि को प्राप्त करता ही है, पाठक भी पत्र लेखक के व्यक्तित्व से सुपरिचित होने का सुअवसर प्राप्त करता है। लेकिन जब कोई पत्रलेखक साहित्यकार एवं कवि भी हो तो सृजन में प्रवृत्त सामान्य लेखक की अपेक्षा संवेदना एवं भावुकता का पुट तथा साहित्य की अभिव्यक्ति उसके लेखन में अधिक स्पष्ट रूप में प्रतीत होती है। निरीक्षण की शक्ति, भावना की तीव्रता, जीवनानुभवों का प्रस्तुतीकरण, दृष्टिकोण की स्पष्टता एवं चिंतन का अभिनव स्वरूप ये सब ऐसे उल्लेखनीय तत्त्व हैं जो किसी साहित्यकार द्वारा सृजित पत्र में विद्यमान रहते हैं।

आधुनिक पत्रलेखन पद्धति में व्यक्तिगत पत्रों का लेखन भले ही परम्परागत रहा हो किन्तु उनके अतिरिक्त अन्य प्रकार के पत्रों में साहित्य को उभारने की चेष्या पूर्ण रूप से की गयी है।

आधुनिक युग के पत्र लेखकों में से कुछ ही विद्वानों का पत्रसाहित्य प्रकाशित हुआ है। जिसमें भी मुख्य रूप से डॉ० सत्यव्रतशास्त्री की 'पत्रकाव्यम्' प्रकाशित रूप में उपलब्ध होता है। इस 'पत्रकाव्यम्' में सन् 1950 के बाद से लेकर 1993 ईस्वी तक के पत्र संग्रहीत किये गये है। शस्यश्यामला, मलयजशीलता, स्वर्गादपिगरीयसी भारत माँ के विद्वान् के 'पत्रकाव्यम्' में 2222 पद्यों के पद्यमय संस्कृत पत्रों का संकलन है जो संस्कृत वाङ्मय में नूतन विधा का श्रीगणेश करता है।

